# अथ बृहस्पतिस्मृतिः

श्रीगणेशाय नमः

तत्रादौससुवर्णपृथिवीदानफलमहत्ववर्णनम्

इष्ट्वा क्रतुशतं राजा समाप्तवरदक्षिणम्
मघवान् वाग्विदां श्रेष्ठं पर्य्यपृच्छद् बृहस्पतिम्  १
भगवन् केन दानेन सर्वतः सुखमेधते
यद्दत्तं यन्महार्घं च तन्मे ब्रूहि महातप  २
एवमिन्द्रेण पृष्टोऽसौ देवदेवपुरोहितः
वाचस्पतिर्महाप्राज्ञो बृहस्पतिरुवाच ह  ३
सुवर्णदानं रोदानं भूमिदानं च वासव
एतत् प्रयच्छमानस्तु सर्वपापैः प्रमुच्यते  ४
सुवर्णं रजतं वस्त्रं मणिरत्नं च वासव
सर्वमेव भवेद्दत्तं वसुधां यः प्रयच्छति  ५
फालकृष्टां महीं दत्त्वा सबीजां शस्यशालिनीम्
यावत् सूर्य्यकरा लोकास्तावत् स्वर्गे महीयते  ६
यत्किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्शितः
अपि गोचर्म्ममात्रेण भूमिदानेन शुध्यति  ७
दशहस्तेन दण्डेन त्रिंशद्दण्डानि वर्त्तनम्
दश तान्येव विस्तारो गोचर्मे तन्महाफलम्  ८
सवृषं गोसहस्त्रं च यत्र तिष्ठत्यतन्द्रितम्
बालवत्सप्रसूतानां तद् गोचर्म इतिस्मृतम्  ९
विप्राय दद्याच्च गुणान्विताय तपोवियुक्ताय जितेन्द्रियाय
यावन्मही तिष्ठति सागरान्ता तावत् फलं तस्य भवेदनन्तम्  १०
यथा वीजानि रोहन्ति प्रकीर्णानि महीतले
एवं कामाः प्ररोहन्ति भूमिदानसमार्जिताः  ११
यथाप्सु पतितः सद्य स्तैलविन्दुः प्रसर्पति

एवं भूमिकृतं दानं सश्ये सश्ये प्ररोहति १२
अन्नदाः सुखिनो नित्यं वस्त्रदश्चैव रूपवान् १३
स नरः सर्वदो भूप यो ददाति वसुन्धराम्
यथा गौर्भरते वत्सं क्षारमुत्सृज्य क्षीरिणी १४
एवं दत्ता सहस्राक्ष भूमिर्भरति भूमिदम्
शङ्खं भद्रासनं छत्रं चरस्थावरवारणाः १५
भूमिदानस्य पुण्यानि फलं स्वर्गः पुरन्दर
आदित्यो वरुणो वह्निर्ब्रह्मा सोमो हुताशनः १६
शूलपाणिश्च भगवानभिनन्दति भूमिदम्
आस्फोटयन्ति पितरः प्रहर्षन्ति पितामहाः १७
भूमिदाता कुले जातः स नस्त्राता भविष्यति
त्रीण्याहुरति दानानि गावः पृथ्वी सरस्वती १८
तारयन्ति हि दातारं सर्वात्पापादसंशयम्
प्रावृता वस्त्रदा यान्ति नग्ना यान्ति त्ववस्त्रदाः १९
तृप्ता यान्त्यग्निदातारः क्षुधिता यान्त्यनन्नदाः
कांक्षन्ति पितरः सर्वे नरकाद्भयभीरवः २०
गयां यो यास्यति पुत्रः स नस्त्राता भविष्यति
एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत् २१
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्
लोहितो यस्तु वर्णेन पुच्छाग्रे यस्तु पाण्डुरः २२
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते
नीलः पाण्डुरलाङ्गूलस्तृणमुद्धरते तु यः २३
षष्टिवर्षसहस्राणि पितरस्तेन तर्पिताः
यच्च शृङ्गगतम्पङ्कं कूलस्तिष्ठति चोद्धृतम् २४
पितरस्तस्य नश्यन्ति सोमलोकं महाद्युतिम्
पृथोर्यदोर्दिलीपस्य नृगस्य नहुषस्य च २५

अन्येषाञ्च नरेन्द्राणां पुनरन्या भविष्यति
बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः २६
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्
यस्तु ब्रह्मघ्नः स्त्रीघ्नो वा यस्तु वै पितृघातकः २७
गवां शतसहस्राणां हन्ता भवति दुष्कृती
स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धराम् २८
श्वविष्ठायां क्रिमिर्भूत्वा पितृभिः सह पच्यते
आक्षेप्ता चानुमन्ता च तमेव नरकं व्रजेत् २९
भूमिदो भूमिहर्त्ता च नापरं पुण्यपापयोः
ऊर्द्ध्वाधो वाऽवतिष्ठेत यावदाभूतसंप्लवम् ३०
अग्नेरपत्यं प्रथमं हिरण्यं भूर्वैष्णवी सूर्यसुताश्च गावः
लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गाञ्च महीञ्च दद्यात् ३१
षडशीति सहस्राणां योजनानां वसुन्धराम्
स्वतो दत्ता तु सर्वत्र सर्वकामप्रदायिनी ३२
भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ३३
सर्वेषामेव दानानां एकजन्मानुगं फलम्
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ३४
यो न हिंस्यादहं ह्यात्मा भूतग्रामं चतुर्विधम्
तस्य देहाद्वियुक्तस्य भयं नास्ति कदाचन ३५
अन्यायेन हृता भूमिर्यै नरैरपहारिता
हरन्तो हारयन्तश्च हन्युस्ते सप्तमङ्कुलम् ३६
हरते हरयेद्यस्तु मन्दबुद्धिस्ततो वृतः
स बध्यो वारुणैः पाशैस्तिर्यग्योनिषु जायते ३७
अश्रुभिः पतितैस्तेषां दानानामपकीर्त्तनम्
ब्राह्मणस्य हृते क्षेत्रे हृतं त्रिपुरुषं कुलम् ३८

वापीकूपसहस्रेण अश्वमेधशतेन च
गवां कोटिप्रदानेन भूमिहर्त्ता न शुध्यति ३९
गोमेकां स्वर्णमेकं वा भूमेरप्यर्द्धमङ्गुलम्
रुन्धन्नरकमायाति यावदाभूतसंप्लवम्
हुतं दत्तं तपोऽधीतं यत्किञ्चिद्धर्मसञ्चितम् ४०
अर्द्धाङ्गुलस्य सीमाया हरणेन प्रणश्यति
गोवीथीं ग्रामरथ्याञ्च श्मशानं गोपितं तथा ४१
सम्पीड्य नरकं याति यावदाभूतसंप्लवम्
ऊषरे निर्जले स्थाने प्रस्तं शस्यं विसजयेत् ४२
जलाधारश्च कर्तव्यो व्यासस्य वचनं यथा
पञ्च कन्यानृते हन्ति दश हन्ति गवानृते ४३
शतमश्वानृते हन्ति सहस्रं पुरुषानृते
हन्ति जाता न जातांश्च हिरण्यार्थेऽनृतं वदेत् ४४
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः
ह्मस्वे मा रतिं कुर्याः प्राणैः कण्ठगतैरपि ४५
अनौषधमभेषज्यं विषमेतद्धलाहलम्
न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते ४६
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्
लोहखण्डाश्मचूर्णं च विषञ्च ज्वरयेन्नरम् ४७
ब्रह्मस्वं त्रिषु लोकेषु कः पुमान् ज्वरयिष्यति
मन्युप्रहरणा विप्रा राजानः शस्त्रपाणयः ४८
शस्त्रमेकाकिनं हन्ति विप्रमन्युः कुलक्षयम्
शस्त्रमेकाकिनं हन्ति विप्रमन्युः कुलक्षयम्
मन्युप्रहरणा विप्रा श्चक्रप्रहरणो हरिः ४९
चक्रात्तीव्रतरो मन्युस्तस्माद्विप्रं न कोपयेत्
अग्निदग्धाः प्ररोहन्ति सूर्यदग्धास्तथैव च ५०

मन्युदग्धस्य विप्राणामङ्कुरो न प्ररोहति
अग्निर्दहति तेजसा सूर्यो दहति रश्मिभिः ५१
राजा दहति दण्डेन विप्रो दहति मन्युना
ब्रह्मस्वेन तु यत् सौख्यं देवस्वेन तु या रतिः ५२
तद्धनं कुलनाशाय भवत्यात्मविनाशकम्
ब्रह्मस्वं ब्रह्महत्या च दरिद्रस्य च यद्धनम् ५३
गुरुमित्रहिरण्यञ्च स्वर्गस्थमपि पीडयेत्
ब्रह्मस्वेन तु यच्छिद्रं तच्छिद्रं न प्ररोहति ५४
प्रच्छादयति तच्छिद्रमन्यत्र तु विसर्पति
ब्रह्मस्वेन तु पुष्टानि साधनानि बलानि च ५५
संग्रामे तानि लीयन्ते सिकतासु यथोदकम्
श्रोत्रियाय कुलीनाय दरिद्राय च वासव ५६
सन्तुष्टाय विनीताय सर्वभूताहिताय च
वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः ५७
ईदृशाय सुरश्रेष्ठ यदत्तं हि तदक्षयम्
आमपात्रे यथान्यस्तं क्षीरं दधि घृतं मधु ५८
विनश्येत्पात्रदौर्बल्यात्तच्च पात्रं विनश्यति
एवं गाञ्च हिरण्यञ्च वस्त्रमन्नं महीं तिलान् ५९
अविद्वान् प्रतिगृह्णाति भस्मीभवति काष्ठवत्
यस्य चैव गृहे मूर्खो दूरे चापि बहुश्रुतः ६०
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः
कुलं तारयते धीरः सप्त सप्त च वासव ६१
यस्तडाकं नवं कुर्य्यात् पुराणं वाऽपि खानयेत्
स सर्वं कुलमुद्धृत्य स्वर्गे लोके महीयते ६२
वापीकूपतडागानि उद्यानोपवनानि च
पुनः संस्कारकर्त्ता च लभते मौलिकं फलम् ६३

निदाघकाले पानीयं यस्य तिष्ठति वासव
स दुर्गं विषमं कृत्स्नं न कदाचिदवाप्नुयात् ६४
एकाहं तु स्थितं तोयं पृथिव्यां राजसत्तम
कुलानि तारयेत्तस्य सप्त सप्त पराण्यपि ६५
दीपालोकप्रदानेन वपुष्मान् स भवेन्नरः
प्रोक्षणीयप्रदानेन स्मृतिं मेधाञ्च विन्दति ६६
कृत्वाऽपि पापकर्म्माणि यो दद्यादन्नमर्थिने
ब्राह्मणाय विशेषेण न स पापेन लिप्यते ६७
भूमिर्गाव स्तथा दाराः प्रसह्य ह्रियते यदा
नचाऽऽवेदयते यस्तु तमाहुर्ब्रह्मघातकम् ६८
निवेदितस्तु राजा वै ब्राह्मणैर्मन्युपीडितैः
तं न तारयते यस्तु तमाहुर्ब्रह्मघातकम् ६९
उपस्थिते विवाहे च यज्ञे दाने च वासव
मोहाच्चरति विघ्नं यः स मृतो जायते क्रिमिः ७०
धनं फलति दानेन जीवितं जीवरक्षणात्
रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते ७१
फलमूलाशनात् पूज्यं स्वर्गं सत्येन लभ्यते
प्रायोपवेशनाद्राज्यं सर्वत्र सुखमश्नुते ७२
गवाढ्यः शक्रदीक्षायाः स्वर्गगामी तृणाशनः
स्त्रिय स्त्रिषवणस्नायी वायुं पीत्वा क्रतुं लभेत् ७३
नित्यस्नायी भवेदर्कः सन्ध्ये द्वे च जपन् द्विजः
न तत्साधयते राज्यं नाकपृष्ठमनाशके ७४
अग्निप्रवेशे नियतं ब्रह्मलोके महीयते
रत्नानां प्रतिसंहारे पशून् पुत्रांश्च विन्दति ७५
नाके चिरं स वसते उपवासी च यो भवेत्
सततं चैकशायी यः स लभेदीप्सिताङ्गतिम् ७६

वीरासनम् वीरशय्यां वीरस्थानमुपाश्रितः
अक्षय्यास्तस्य लोकाः स्युः सर्वकामगमास्तथा ७७
उपवासञ्च दीक्षाञ्च अभिषेकञ्च वासव
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ७८
अधीत्य सर्ववेदान् वै सद्यो दुःखात् प्रमुच्यते ७९
पावनं चरते धर्मं स्वर्गे लोके महीयते ८०
बृहस्पति मतं पुण्यं ये पठन्ति द्विजातयः
चत्वारि तेषां वर्धन्ते आयुर्विद्या यशो बलम् ८१

इति बृहस्पतिप्रणीतं धर्म्मशास्त्रं सम्पूर्णम्

समाप्ताचेयं बृहस्पतिस्मृतिः

Credits
Sources: K.V. Rangaswami Aiyangar, *Bṛhaspati-Smṛti (Reconstructed)*, GOS lxxxv, Baroda 1941
Typescript: Input by Yasuke Ikari and Akihiko Akamatsu
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management
Vedic Literature Collection